# कात्यायनी शिक्षा

श्री रामचन्द्राय नमः

अथ मा स न शब्देभ्यो वकारो द्विर्विभाषया
वो वां वा वी संहितायां लघुः स्याद् द्विः पदेषु वै १
इत्यमोघनन्दिनी शिक्षायाम्
पादादौ च पदादौ च संयोगावग्रहेषु च
यः शब्द इति विज्ञेयो योऽन्यः स य इति स्मृतः १
युक्तेन मनसा तद्वत्तत्त्वा यामि तथापरम्
अनूकाशेन बाह्यं च तुरीयमनुया पदे २
शाखान्तरे पदान्तस्थो दीर्घत्वे न उदाहृतः
पादादिश्च तथा कारश्लेषद्दीर्घ उदाहृतः ३
षकारस्तु वकारः स्यादृत्ययोगे षकारकः
स्थानात् त्यागेन संहितो ह्यन्यदादोषमाप्नुयात् ४
यकारस्तु जकारस्यात्यदादौ यदि दृश्यते
न न मासनशब्देभ्यो उपसर्गपरस्तथा ५
अन्तरा तूपयज्ञं स्यात् आद्यं चैव विभावयेत्
रेफो रेत्वमवाप्नोति रोष्माणः परतो यदि ६
स्वरात्पूर्वं विद्यमानादकारेऽपि तथा परम्
आगमो मतमन्येषामादेशो नास्मदादिकाः ७
वकारस्त्रिविधः प्रोक्तो गुरुर्लघुर्लघूत्तरः
आदिर्गुरुर्लघुर्मध्ये पदान्ते तु लघूत्तरः ८
यदेव लक्षणं यस्य वकारस्य तु तद्भवेत्
रङ्गौ द्वावे बहिः स्यातां रङ्गादिरङ्गकैः ९
लुप्ते नकारे चादिरङ्गं नो लिप्ति तु द्वितीयकम्
रङ्गः सैव विजानीयात् न कारो यत्र लुप्यते १०
स्वरेऽपि परतश्चैव व्यञ्जने त्वनुनासिकम्

इति कात्यायनी शिक्षा

Reference:
Kātyāyanī Śikṣā, courtesy of the Library of the University of Bombay, listed in Devasthali, G.V., *A Descriptive Catalogue of the Saṁskṛta and Prākṛta Manuscripts in the Library of the University of Bombay* -- Bombay: University of Bombay, 1944. 11 verses, 4 folios.